श्रीभाष्यम्

दुःखोपभोगापवर्गसाधनभूतायाः अचेतनायाः अत्यल्पप्रजासर्गकरागन्तुकसङ्गमचेतनाविशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागाहेतुभूतस्वसंबन्धिपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव। 'अजामेकाम्' 'अजोह्येकः' (कठ.१.३ ३) 'अजोऽन्यः' इत्यत्राजाशब्दस्य विरूपार्थकल्पनं च न शोभनम्। सर्वत्र छागत्वं परिकल्प्यत इति चेत् 'जहात्येनां भुक्तभोगामजोऽन्यः [१.३.३] इति विदुष आत्यन्तिकप्रकृतिपरित्यागं कुर्वतोऽनेनचाऽन्येन वा पुनरपि संबन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥

इति चमसाधिकरणम्

श्रुतप्रकाशिका

एकरूपेति। दुग्धादिरेव प्रयोजनमित्यर्थ अचेतनाया इत्यनेन स्वसंबन्धिपरित्यागासामर्थ्यं सिद्धमिति तत्प्रत्यनीकाकारमाह—स्वसम्बन्धीति। परिमितकार्यकरत्वादिरत्र विरोध उक्तः। दूषणान्तरमाह—अजामिति। अर्थैकरूप्य शङ्कते—सर्वत्रेति। तत्र विरोधान्तरमाह—जहातीति। एवमर्थौचित्यलाभरूपप्रयोजनाभावो दर्शितः। सर्वत्र छागत्वपरिकल्पनशङ्कोपन्यासेनैवानेकपदान्तरमुख्यार्थत्वसिद्धिरूपप्रयोजनाभावश्च फलितः। एवं हेत्वभावात् प्रयोजनाभावाच्च छागत्वपरिकल्पनं व्युदस्तम् ॥

ननु नात्र विरोधः कार्यकारित्वप्रयोजनसाधनत्वचेतनसङ्गादिमात्रस्य विवक्षितत्वात्। नहि दृष्टान्तगतसर्वधर्माणां विवक्षानियमोऽस्ति तथासति सर्वत्र दृष्टान्तोपन्यासभङ्गप्रसङ्गात् 'गौरनाद्यन्तवती' 'आत्मानं रथिनं विद्धि' इत्यादिषु च प्रकृत्यादेर्गोत्वादिपरिकल्पनं दृश्यते, तच्च सर्वथा साधर्म्यविवक्षायां न घटत इति। उच्यते—'आत्मानं रथिनं विद्धि' इत्यत्र पृथगेव रूप्यरूपकवाचिपदश्रवणात् रूपकानङ्गीकारे रूपकवाचिपदवैयर्थ्यप्रसङ्गात् येन कारणेन साधर्म्यं योग्यं प्राप्त्युपायतादिरूपं तदाकारमात्रं तत्र विवक्षितमिति निश्चितं प्रयुक्तपदवैयर्थ्यपरिहारार्थं 'अजामेकाम्' इति वाक्ये तु रूप्यरूपकवाचिपदद्वयाश्रवणात् अर्थौचित्यं नावगम्यते, तेन गौणवृत्त्यनङ्गीकारेऽपि नवैयर्थ्यम्। 'गौरनाद्यन्तवती' इत्यत्र रूप्यवाचिपदाश्रवणात् अजाशब्दवद्गोशब्दस्यावयवशक्त्या प्रकृत्युपस्थापनासामर्थ्याच्च गत्यभावाद्गौणीवृत्तिराश्रिता 'अनाद्यन्तवती' 'सर्वकामदुघे' इत्याद्युचितविशेषणश्रवणादर्थौचित्यमवगम्यते। अजाशब्दे तु न तथा गत्यन्तराभावः, उचितावयवार्थसंभवात्। उचितविशेषणं च रूढिसिद्धाऽजात्यार्थकं न श्रूयते पुल्लिङ्गाजशब्दयोश्चामुख्यत्वं 'बह्वीः प्रजाः' इत्यादिपदानां सङ्कोचश्च विफलः। अतः प्रयुक्तपदवैयर्थ्यपरिहारपदान्तरस्वारस्यार्थौचित्यसद्भावासद्भावरूपवैषम्यात् 'आत्मानं रथिनं विद्धि' इत्यादिवद्दूषणपरत्वमनुक्तम्। कार्यकारित्वाद्यर्थमात्रविवक्षायामर्थविरोधाभावो यदुक्तं, सचेन्मुख्ययैव वृत्त्या लभ्यते तदा गौणवृत्तिपरिग्रहो निष्फलत्वादनुपपन्नः। एवं परोक्तस्य 'ज्योतिरुपक्रमे' इत्यादिसूत्रार्थस्य एकशब्दार्थविरोध उक्तः, 'कल्पनोपदेशात्' इति सूत्रस्याजाशब्दास्वारस्य दूषणतयोक्तम्। यद्यपि ज्योतिरुपक्रमाशब्देन तेजः प्रमुखत्वं, कल्पनशब्देनारोपितत्वाद्याशोदणं च परोक्तं सूत्राक्षरानुगुणमिव प्रतीयते, तथाऽप्यनुपपत्तिपराहतम्। अस्मदुक्तार्थस्तु वैदिकनिर्देशसमाधिना स्वरसतरम्, अर्वाग्बिलः 'चमसवदविशेषात्' इति सूत्र परस्यास्वरस चमसशब्दस्य यौगिकत्वात् रूढार्थत्वपरत्वाभावाच्च ॥

इति चमसाधिकरणम्